सर्वतीर्थमनुं स्मृत्वा तत्तोयैरभिषेचयेत् । भस्मक्षानं ततः कुर्यात् परमेष्ठिमनुं स्मरेत् ॥ १२ ॥
पिण्डं दक्षिणमूर्धानं न्यस्तं दर्भास्तरे पुनः । नववस्त्रस्रगालेपैरलंकृत्याथ भूषणैः ॥ १३ ॥
तस्मिन् पिण्डे न्यसेत् पश्चान्मन्त्रराजमशेषतः । अभ्यर्च्य क्रममुद्वास्य समाप्ति गुरुपादुकाम् ॥ १४ ॥
सम्यग्विमानं संकल्प्य संस्थाप्य तं विचक्षणः । ग्रामं प्रदक्षिणीकृत्य शङ्खभेर्यादिभिःस्वनैः ॥ १५ ॥
प्रेतस्थानं प्रविश्याथ दक्षिणोत्तरमायताम् । उपलिप्य समां भूमिं लाजाक्षततिलानपि ॥ १६ ॥
विकीर्य सर्षपान् प्रोक्ष्य विमानं तत्र विन्यसेत् । संस्थाप्य तत्र चित्याग्नि परिस्तीर्य विलोमतः ॥ १७ ॥
पात्राण्यासाद्य विधिवद् दक्षिणे विष्णुदेवतम् । प्रणीतापात्रमासाद्य सम्पूज्य कुसुमादिभिः ॥ १८ ॥
दर्भैराच्छादितं धीमान् वह्निकोणे प्रविन्यसेत् । दक्षभागे यजेद् देवं भैरवं मण्डले क्रमात् ॥ १९ ॥
पूर्वोक्तेन विधानेन कृत्वा जिह्वादिकल्पनाम् । तिलतण्डुलसंमिश्रं पायसं चरुकं पुनः ॥ २० ॥
मृत्युञ्जयेन संमन्त्र्य पञ्चश्लोकैर्विशेषतः । साज्येन चरुणा पश्चात् पञ्चरत्नैर्विशेषतः ॥ २१ ॥
ब्रह्माण्यां न्याससम्प्रोक्तैः स्वाहान्तैः सुसमाहितः । मूलविद्याद्वयं जप्त्वा प्रत्येकं सप्तसप्तकम् ॥ २२ ॥
हुनेत्क्रमात् सावरणं विलोमेन विधानतः । एवं विलोमतो होमान्न्यस्तमन्त्रान् गुरोस्तनौ ॥ २३ ॥
क्रमेण विलयं कुर्यात् सूक्ष्मपुर्यष्टकात्मनि । हुत्वा वाग्भवमन्त्रेण स्वाहान्तेन विचक्षणः ॥ २४ ॥
पुनश्च विद्यया हुत्वा ततस्तत्त्वलयात्मिकाम् । इष्टिं संन्यासिनां कुर्यात्क्रमेण व्याप्तिभाजनम् ॥ २५ ॥
ततस्तत्त्वानि सूक्ष्माणि विलोमेन विधानतः । तत्रार्धे शेषं संयोज्य सर्वमात्मनि योजयेत् ॥ २६ ॥
सूक्ष्मरूपेणात्मगतपुण्यपापे सदा ह्ययम् । नाशयेत्कर्म शिष्यस्य भयभक्षिणिहोमतः ॥ २७ ॥

५ खटंकसखवरयूं हुं फट् शिशोः खहुं पुण्यपापानां नाशयामि स्वाहा ५ ।

एवं स्थूलक्रमं हुत्वा सूक्ष्मलीनं विभावयेत् । विलोमेन क्रमेणैव सूक्ष्मं चापि परं तथा ॥ २९ ॥
एवं विभौ समायोज्यं शिष्यं क्षीणमलत्रयम् । पूर्णाहुतिप्रयोगेण योजयेत्परमे पदे ॥ ३० ॥
शिवशक्त्यात्मके शुद्धे पुनरावृत्तिवर्जिते । संवित्सुखमये साक्षात् तत्त्वातीते निजे पदे ॥ ३१ ॥
इति संयोजिते साक्षाद् गुरुणा परमे पदे । संत्यज्य मलकालुष्यं शुभं वा चावकल्पके (?) ॥ ३२ ॥
आज्येन जुहुयात् पञ्चश्लोकैस्तत्त्वैरघोरतः । अनुलोमविधानेन प्रायश्चित्ताय चास्तिकः ॥ ३३ ॥
देहमानेन शिष्यस्य शयनं परिकल्पयेत् । बहिर्दक्षिणदिग्भागे कुलवृक्षसमुद्भवैः ॥ ३४ ॥
शंकुभिर्दक्षिणावर्तसमिद्भिर्वाथ पिङ्गलैः । दर्भैश्च शयनं कृत्वा त्रिगुणीकृत्य तन्तुना ॥ ३५ ॥
नवकृत्वो वेष्टयित्वा चन्दनागुरुपूर्वकैः । कृत्वा चितिं पुनः काष्ठैर्नववस्त्रेण वेष्टयेत् ॥ ३६ ॥
पद्मं त्रिकोणषट्कोणकर्णिकं साष्टपत्रकम् । सद्विरेखं विधायात्र पुष्पाणि विनिसार्य च ॥ ३७ ॥
प्रेतं दक्षिणमूर्धानं विन्यस्य जिह्मदृष्टिकः । रक्षां मन्त्रेण संकल्प्य ज्वालामालिनिविद्यया ॥ ३८ ॥
प्रज्वाल्याघोरमन्त्रेण तथा पाशुपतेन वा । यावद्भस्मीभवत्येतत् तावद्धोमो विधीयते ॥ ३९ ॥
प्राप्ता ये गोत्रिणस्तत्र सर्वत्र च समागताः । स्तोत्रं मन्त्रजपं कुर्युः प्रयुतायुतकर्मणा ॥ ४० ॥
विभाव्य क्रमतः प्रेतं भक्षितं योगिनीगणैः । विद्याद्वयजपं कुर्यान्निश्चलेनान्तरात्मना ॥ ४१ ॥
स्तुत्वा पश्चाद्यथाशास्त्रं स्वक्रमं सम्यगर्चयेत् । रक्षयेच्च चितावह्निं यावदस्थिसमुच्चयम् ॥ ४२ ॥
दिवसे सप्तमे वह्निं घृतेन पयसाथवा । निर्वाप्यास्थीनि पादाद्यं नवधा मस्तकावधि ॥ ४३ ॥
क्रमात् संगृह्य निःक्षिप्य पात्रे संवेष्ट्य वाससा । नवेन भस्म प्रक्षिप्य नद्यां तोयालयेऽपि वा ॥ ४४ ॥
देवमातृगृहे वाथ स्वगृहे वास्थिभाजनम् । खात्वा निधाय तस्योच्चैर्मेखलात्रयसंयुतम् ॥ ४५ ॥
पीठं संकल्प्य शिष्यो वा कनिष्ठोऽणुविधानवित् । त्रिसंध्यमर्चयेत् पीठे विधिवद्गुरुमण्डलम् ॥ ४६ ॥
एकादशे दिने कृत्वा सायमुत्सवमास्तिकः । सम्यक्पात्रं प्रतिष्ठाप्य हेतुनापूर्य सादरम् ॥ ४७ ॥

स्वर्णरत्नादिकं तत्र विनिःक्षिप्य यथाबलम् । समयाचारसंपन्नं नित्यपूजापरायणम् ॥ ४८ ॥
योग्यं मान्त्रिकमानीयं सम्पूज्यास्मै निवेदयेत् । एवंपूजां मृताहेऽपि प्रतिमासं समाचरेत् ॥ ४९ ॥
सम्पूर्णे वत्सरे कुर्यान्महोत्सवमतन्द्रितः । अस्थिभाजनमुद्धृत्य पश्चाद् देशिकपुङ्गवः ॥ ५० ॥
नद्यां समुद्रगामिन्यां निक्षिपेन्निखनेत् तु वा । नदीतीरेऽथवान्यत्र तत्र वृक्षान् प्ररोपयेत् ॥ ५१ ॥
अथवा प्रतिमां वापि कृत्वा शिल्पिभिरन्वितः । पादुकां वा शुभे देशे सुलग्ने सुमुहूर्तके ॥ ५२ ॥
पूर्वोक्तेन विधानेन संयोज्य परमे पदे । भावयेन्मनसा पश्चाद् शंभुत्वं तस्य चान्तिके ॥ ५३ ॥
ये केचित् पशुमार्गस्था गुप्ताचाराः कुलागमे । तेषामपि मृते कुर्याद्दर्भैः पञ्चाशता गुरुः ॥ ५४ ॥
विधाय कूर्चमावाह्य तत्र प्रेतं विधानतः । पूर्वोक्तेन विधानेन तत्र सर्वं समाचरेत् ॥ ५५ ॥
जोषयेदन्यशिष्याणामन्यथा कृपया गुरुः । कुर्याद्वा तेन प्रतिमामन्त्येष्टि कुलशासने ॥ ५६ ॥
सर्वलक्षणसम्पन्नं शालिपिष्टमयं शुभम् । देहं कृत्वा समावाह्य शिष्यात्मानं विधानतः ॥ ५७ ॥
तस्मिन् पिण्डे न्यसेत्पूर्वं मन्त्रं पूर्ववदेव तु । पश्चाद्विलोममार्गेण हुत्वा स्थूलक्रमं बुधः ॥ ५८ ॥
परे क्रमे निवेश्याथ पिण्डं पिष्टमयं ततः । स्रुचि निःक्षिप्य जुहुयात् स्रुवेणाच्छाद्य देशिकः ॥ ५९ ॥
पूर्णाहुतिप्रयोगेण प्राणाद्यैरेव पञ्चभिः । गुरुमुद्दिश्य कर्तव्या शिष्यैर्हुतिभिरेव वा ॥ ६० ॥
अन्त्येष्टिः सर्वदा कार्या मृतानाममृतेन तु । साक्षात् शाम्भवसिद्धानामन्ययोगो विधीयते ॥ ६१ ॥
तथापि कुर्यात्सिद्धार्थमात्मनः सर्वमास्तिकः । अथवा मनसा कुर्यादेकान्ते स्वयमास्तिकः ॥ ६२ ॥
मानसं परमुत्कृष्टं योगिनामपि न स्थितिः । तस्मात् सर्वप्रयत्नेन मानसं क्रममाचरेत् ॥ ६३ ॥

इत्यन्त्येष्टिविधिः ॥

श्रीनाथाङ्घ्रिसरोजकल्पकमहाशाख्यैकनानाविल-
श्रीमत्तन्त्रकदम्बकाकलनतो विद्यार्णवाख्यं परम् ।
विद्यारण्ययतिश्चकार सुमहत्तन्त्रं सतां प्रीतये
श्रीविद्यानगरेऽम्बदेवनृपतौ सन्नीतितः शासति ॥

इति श्रीमहामहोपाध्यायभगवत्पूज्यपादश्रीगोविन्दाचार्यशिष्य-श्रीभगवच्छंकराचार्यशिष्-
श्रीविष्णुशर्माचार्यशिष्य-श्रीप्रगल्भाचार्यशिष्य-श्रीविद्यारण्ययतिविरचिते
श्रीविद्यार्णवाख्ये तन्त्रे षट्त्रिंशत्तमः श्वासः ॥ ३६ ॥

समाप्तोऽयं श्रीविद्यार्णवः । शुभमस्तु पाठकोपासकेभ्यः ।

श्रीकण्ठनाथाख्यहिमाद्रिशृङ्गंस्रवत्सुतन्त्रामृतनिर्झराणाम् ।
वैधात्रसोपानपथावतारस्रोतोजुषां भूमिमुपागतानाम् ॥ १ ॥
पूर्वादिकाम्नायभिदा प्रसिद्धः संभेदभूत. खलु गौडपादः ।
वंशक्रमाच्छास्त्रमिदं तु तस्माच्छ्रीशङ्करस्वामिनमेत्य भेजे ॥ २ ॥
शिष्यैर्यदीयैः किल सम्प्रदायाः प्रचारिताः क्षेत्रमठादिकेषु ।
दृश्यन्त एवाद्य च तत्प्रशिष्यशिष्यो न्यबध्नाद् गुरुसाम्प्रदायम् ॥ ३ ॥
विद्यार्णवाभिख्यमिदं सुतन्त्रं विद्याद्यरण्याख्य-यतिर्यतीन्द्रः ।
त्र्यङ्काङ्कभूसंमित ( १९९३ ) वैक्रमाब्दे राजेश्वरश्रीहरिसिंहशिष्ट्या ॥ ४ ॥
श्रीरामचन्द्राधिकृतित्वनीतौ कश्मीरदेशे हरभट्टशास्त्री ।
संपाद्य विद्वत्-शिवनाथसाह्यात् प्रकाशयद् ग्रन्थमिमं सुपूर्णम् ॥ ५ ॥

